~~(मनोरमा शब्द संकलित~~ (प्रौढ़) मनोरमा
of भट्टोजी दीक्षित with the
commentary 'शब्द रत्न' of हरि दीक्षित
– upto अव्ययीभाव – Borror eaten
very slightly pin hols in some leaves
damaging a few letters or words.
Published by – ~~विद्योदय~~ विद्योदय प्रेस.
loose lvs. litho print edn, Banaras.
Vik. era – ~~1930~~. 1930.

1231

Bill No. 2/07-08
135
2008-0148

Holiday on Earth!

Prez for CBI probe


Anara Gupta

अनुत्पादादिति॥अतएवतस्याःश्रवणंन।अभेदविवक्षापदार्थश्चार्थवत्सूत्रेनिरूपयिष्यते।नचलिङ्गसर्वनामनपुंसकताभ्युपगमेनोत्पन्नायाविभक्तेर्लुक्प्रसङ्गापत्तेः।नचसुप्सुपेतिसमा
सेननिर्वाहः।इतिशब्दस्यशब्दस्वरूपपरतातात्पर्यग्राहकत्वेनतेनैकार्थीभावरूपसामर्थ्यस्यदुरुपपादत्वात्।नचगोभ्यांगोक्षीरमित्याद्येकदेशगोशब्दानुकरणेऽत्रलुक्सूत्रभाष्यो
क्तेनप्रकृतिवदनुकरणमित्यतिदेशेनपदत्वंसुलभमितिवाच्यम्।सियोदीर्घादितिसूत्रभाष्योक्तेनतदतिदेशानित्यत्वेनतदप्रवृत्तिमाश्रित्यापिसुसाधत्वेनासाधारणप्रयोजनत्वाभावादि
तिभावः।एतदर्थमेवेति।एतदर्थमपीत्यर्थः।अनितेः।क्विपिसंबुद्धावान्।चिनोषीत्यत्रनष्ठीवीतिरुत्वेऽत्रानुनासिकइतिपूर्वस्यानुनासिकोऽयदेत्नांश्चिनोषिकमलँआंश्चिनोषीत्यत्रापिफलसत्त्वा
गावितिचनपदम्।अनुकार्यानुकरणयोरभेदविवक्षयाअर्थवत्त्वाभावेनविभक्तेरनुत्पादात्।उञः।निपातएकाजितिप्राप्तेविभाषेयम्।ऊँ।अनुनासिकइति।तेनास्मिन्परेयरोऽनुना
सिकइतिविकल्पः।यदेतनुँइतिपठसियदेतदूँइतिवातद्दीर्घमित्यादि।एतदर्थमेवतत्रानुनासिकग्रहणम्।अन्यथायरोञमिञम्वेत्येवावक्ष्यत्।मयउञोवोवा।मयःपरस्येति।प
रादितितुप्राचःप्रमादः।षष्ठीनिर्दिष्टस्यहिआदेशाउच्यन्तइतिभाष्यात्।आदेशविधौस्थानिनःषष्ठ्याएवन्याय्यत्वाच्च।असिद्धत्वादिति।अतएवेदंषत्वंत्रिपाद्यांविधीयते।प्रकृति
भावमात्रबाधनार्थत्वेहिइकोयणित्यनन्तरंमयउञोवेत्येवावक्ष्यत्।यणंचान्ववर्तयिष्यत्।इहमयउञइतौपरेअष्टाविंशतिरूपाणि।तथाहि।उञइतिप्रगृह्यत्वेकिमुइति।वत्वपक्षे
किम्विति।ऊँआदेशेकिमूँइति।आदेशस्यस्थानिवत्त्वेनमयउञइतिप्रकृतिभावापवादभूतेआन्तरतम्यादनुनासिकेवकारेकिम्वँिति ॥ [illegible] त्।अवक्ष्यदिति।नचैवंन्यासेयथासं
ख्यापत्तिः।तस्यासार्वत्रिकत्वात्।आन्महतइत्यादिनिर्देशाच्चेतिभावः।पूर्वोक्तेकमलाँश्चिनोषीत्यत्रलस्यनकारापत्तिवारणायविधेयकोटावनुनासिकइति॥विधेयकोटौयकार
मारस्यप्रत्याहारेणुविधेयविषयेसवर्णग्रहणाभावेनपूर्वोक्तेनिरनुनासिकत्वस्यैवापत्तिरितियथान्यासमेवसाधु॥इत्येवावक्ष्यदिति।नचात्रापिन्यासेसन्निपातपरिभाषयानुस्वारप्राप्तिरि
तिवाच्यम्॥त्रिपाद्यान्तथापाठेनसन्निपातपरिभाषाऽनित्यत्वस्यापिज्ञापनादितिभावः॥अनुनासिकेवकारेइति॥इदंकैयटानुरोधेन।मयउञइत्यत्रविधीयमानस्यसवर्णाग्राहकत्वेनानेन
स्यानुनासिकविधानाभावेनकथमत्रसः।अन्यथेदमोमस्याऽनुनासिकोऽकारःस्यात्।अतएवेदशोविषयेगुणानामभेदकत्वपक्षानाश्रयणमितिचिन्त्यम् ॥*॥इतिस्वरसन्धिः॥*

विनापितद्योगमिति॥साहित्यंचयोगक्रियायाम्।एतदिति।संयोगइतितदर्थः।तस्याभावेनिवन्निर्देशः।संयोगश्चाव्यवहितयोरेवेतिचितंकटुतैलमित्यादौनदोषः।यथासंख्यमिति॥तथ्यद्ध
नेत्यादेरप्यनादित्यात्समादायपरस्मैपदानांणलित्यादौसूत्रान्तरस्यक्रमेणेवयथासंख्यमितिभावः।ह्वादिशब्देश्चानादिसिद्धलोकप्रसिद्धक्रमेणैवोपस्थितिरितितात्पर्यम्।ननुतज्ज्ञानमित्या
अनुनासिकाननुनासिकयोर्वकारयोर्मयोयणइतिद्वित्वस्यमकारस्यानचिचेतिद्वित्वस्यचविकल्पेनवत्वपक्षेरूपाष्टकम्।तदभावेद्वयमितिदशकम्।प्रगृह्यसंज्ञाविरहप
क्षेमयउञइतिवत्वस्यासिद्धत्वादिकोयणचीतियणेव।तस्यसिद्धत्वान्मोनुस्वारेवापदान्तस्येतिपरसवर्णपक्षेअनुनासिकाननुनासिकवकारद्वयोपेतमेकादशंरूप
म्॥अनुनासिकस्यद्वित्वेहलोयमामितिलोपस्यवैकल्पिकत्वादकरणेत्रिवकारंद्वादशंरूपम्।परसवर्णाभावपक्षेअनुस्वारस्ययत्वात्याक्षिकेद्वित्वेद्वेसंकलनयाचतुर्द
श।इतिशब्देकारस्यअणोप्रगृह्यस्येत्यनुनासिकविकल्पादष्टाविंशतिरिति॥इत्यच्सन्धिः॥स्तोश्चुना॥स्तोरितिसमाहारद्वन्द्वः॥सौत्रंपुंस्त्वम्।श्चुनेति॥सहयुक्तेतिसू
त्रेविनापितद्योगंतृतीयेतिवक्ष्यते।योगइत्येतदध्याहारलभ्यम्।अत्रस्थान्यादेशयोर्यथासंख्यंनिमित्तकार्यिणोस्तुन॥शादितिज्ञापकात्।अल्पाच्तरमित्यादौतु
सौत्रत्वात्श्चुत्वंन।तज्ज्ञानमित्यादौतुभवत्येव।स्तोश्चोश्चुरितिसुवचम्।नचतस्मिन्नितिनिर्दिष्टइतिपरिभाषोपस्थानेनयज्ञः याञ्चाइत्यादिनसिद्ध्येत्।शादितिलिङ्गे
नतस्याइहानुपस्थानाभ्युपगमात्।ष्टुना॥इहापिकार्यिनिमित्तयोर्यथासंख्यंन।तोष्विइतिज्ञापकात्।शेष्टुरितिसुवचम्।ईड्ढेईड्ढेइत्यादौनपदान्तादितिज्ञापकान्नदो
षः।सर्पिष्टममिति॥ह्रस्वात्तादाविति षत्वम्।प्रत्ययेभाषायामिति।यत्तुप्राचामयटिनित्यमितिपठितम्।यच्चहलन्तप्रकरणेषण्णांषड्णामित्युदाहृतम्।य
च्चयरोनुनासिकइतिवानुनासिकइतितत्रव्याख्यातंतत्सर्वंभाष्यविरोधादुपेक्ष्यम् ॥ ॐ दोश्चुयोगाभावान्नस्यादत आह॥तज्ज्ञानमिति॥जञयोरेतयोरुच्चा
रणमात्रंनत्विदंवर्णान्तरमितिभावः॥अनुपस्थानेति॥पूर्वत्वांशानुपस्थानेत्यर्थः।तेनचितमित्यादौनदोषः॥षत्वमिति॥नचषस्यपदान्तेजश्त्वंभविष्यतीतितद्धर्थमि
तिवाच्यम्।षत्वस्यासिद्धत्वेनास्यजश्त्वाभावात्॥भाष्येति॥प्रत्ययेइत्येवतत्रपाठादितिभावः ॥

इकारमिति॥चर्त्वेनेतिभावः।मृच्छब्दस्ययवादिगणेपाठेनमानमितितत्रभयइतिवत्त्वेमृद्वानिस्येवेतितात्पर्यम्।इतिकेचित्तन्न। मृन्मानितितुकाचित्कोऽसांप्रदायिकः पाठः।ननुसव
र्णपदमधिकं परसवर्णोत्त्वैनैकार्थीभावापन्नस्यान्यत्रसंबन्धोवक्तुमशक्यः।नचपूर्वस्येत्यस्यसंबन्ध्याकाङ्क्षायांयत्किंचित्संबन्धिकल्पनापेक्षयापूर्वत्रोपस्थितार्थवाचकपदाध्याहारोचि
त्यात्तल्लाभः । झरूदृत्यादावादेरप्येवमेवसंबन्धोपपत्तौतत्रतत्रस्वरितत्वप्रतिज्ञायावैयर्थ्यापत्तेः।नचस्वरितत्वप्रतिज्ञासामर्थ्यादेकदेशानुवृत्तिः।तोर्लीत्यत्रसमुदायानुवृत्त्यातस्या
श्चारितार्थ्यादित्यतआह।अनुस्वारस्येत्यादि।एकदेशइतिच।पकारमात्रेस्वरितत्वप्रतिज्ञयैवतोर्लीत्यादावनुवृत्तिसिद्धौपुनः सकारांशेनप्रतिज्ञातावतोप्यंशस्यउत्तरत्रानुवृत्तिरितिभावः॥
नदतिरभसादिति॥चयोःभावात्।दीर्घादाचार्याणामित्युत्तरमनुस्वारस्ययिवापदान्तस्य।तोर्लि।उदस्था।झयोहो।शश्छोटीतिषट्सूत्रीपाठोत्तरंझलांजशझशि।अभ्यासेचर्चखरिचावावसाने।अणो
यवादिगणइति।यविभंतसौमत्वर्थइतिसंहितयापाठेनसावितितात्पूर्वेदकारंप्रश्लिष्यभत्वेनाप्येतत्समाधातुंशक्यम्।उदस्था॥अनुस्वारस्ययीत्यत्रसमस्तमपिसवर्णग्रहणमिह
निष्कृष्यसंबध्यते॥एकदेशेस्वरितत्वप्रतिज्ञानादित्याशयेनाह॥पूर्वसवर्णःस्यादिति॥अघोषस्येत्यादि॥एतेनसस्यतकारइतिप्राचांग्रन्थाःप्रत्युक्ताः॥यदपीहचयोर्द्वितीयःशरि
स्थस्योपन्यसनंतदतिरभसात्।तच्छिवइति।यत्तुप्राचाततत्शिवइत्यत्रजश्त्वेकृतेखरिचेत्युक्तम्।तन्न।तदोदान्तत्वेनजश्त्वोपन्यासवैयर्थ्यात्।यत्तुतत्त्वौत्रेणोक्तंतदेवाव
सानइतिचर्त्वेकृतेपश्चाच्छिवइत्यनेनसंबन्धेझलांजशोन्तइतिजश्त्वेखरिचेतिचर्त्वमितितदतिस्थवीयः।जश्त्वंप्रतिअवसानेचर्त्वस्यअपवादत्वात्॥ प्रगृह्यस्येतिपञ्चसूत्र्याः
पाठेभाष्यसंमतेथस्यचर्त्वेपितस्यासिद्धत्वाच्चशर्परत्वाभावाच्चेतिभावः॥चर्त्वमिति॥ततश्चुत्वेशश्छोटीतिप्रक्रियेतिभावः॥चर्त्वापवादत्वादिति॥एवंचतत्रकृतेजश्त्वाप्रवृत्तिरितिभावः।नच
जश्त्वेकृतेचर्त्वस्यचारितार्थ्येनतस्यासिद्धत्वादपवादत्वेनमानमितिवाच्यम्॥तत्कालेऽवश्यंप्राप्तत्वेनयेननाप्राप्तिन्यायेनापवादत्वस्यसुलभतयोक्तरीतेरसंभवात्।एतदेवाभिप्रेत्यमिदचोन्त्या
त्सूत्रेभाष्येउक्तम्॥सत्यपिसंभवेबाधनंभवतीति।अन्यथाकौण्डिन्यायतक्रमित्यनेनब्राह्मणेभ्योदधीतिप्राप्तदधिदानस्यापिबाधोनस्यात्।तद्दानोत्तरंतत्पूर्वंवातद्दानस्यचारितार्थ्यात्।अतए
वाजादेर्द्वितीयस्येतिसूत्रेप्रथमद्विर्वचनोत्तरमस्यचारितार्थ्येनप्रथमद्विर्वचनस्यानेनबाधोनस्यादित्याशङ्क्यसत्यपिसंभवेइतिन्यायेनबाधकत्वमुक्तंभाष्ये।एवंचदयतेर्दिगीतिसूत्रस्थकैयटादिग्रन्थाअ

संभवेएवबाधकत्वेतिवालिंकाद्युसारेणप्रस्तुतमसुक्तमिदं
लिको ह्यमितिभावः॥

केनवार्यतामिति॥एवंचेदप्राविषयेवाक्यसंस्कारपक्षेणैवसाधुत्वान्वाख्यानमितिस्वीकृत्याकृतव्यूहपरिभाषात्याज्येतिचेदिष्टापत्तिरितिबोद्ध्यम्।अन्येतुपदसंस्कारेहरिःअस्तीतिसविसर्गम
पिसाध्वेवसत्यभिधाने,परिभाषायाभाष्येऽदर्शनादित्याहुः॥प्रमाणाभावादिति।योगविभागस्यभाष्येऽदर्शनेनाप्रामाणिकत्वाच्चेत्यपिबोद्ध्यम्।यथासंख्यस्येति॥त्यान्तैकदेशेनसूत्रस्यग्रहणं
बोद्ध्यम्।परत्वादिति॥तस्मिन्निितिसूत्रापेक्षयातस्मादित्यस्यपरत्वादित्यर्थः।ङकारात्सकारेधुडित्यर्थेतस्मिन्नित्यस्यप्रवृत्तावुपस्थितङकारस्यागमित्वंतस्मादित्यस्यप्रवृत्तावुपस्थितसस्य
जश्त्वेपिवशब्दानपेक्षणाच्च।भाविन्यवसानभङ्गे॰वावसानइत्यस्यपूर्वमप्रवृत्तेश्च।प्रवृत्तस्यवानिवृत्तिसंभवात्।उक्तंचअकृतव्यूहाः पाणिनीया इतिकृतम
पिशात्वंनिवर्तयन्तीतिच।अन्यथाहरिरयमित्यत्रापित्वदुक्तरीत्याप्रवृत्तोविसर्गः केनापवार्यताम्॥अथतनोतीतितदितिक्विबन्तंब्रूषेएवमपिजश्त्वेनदका
रोस्तुचर्त्वेकृतेश्रुत्वमितितुनन्याय्यम्।श्रुत्वंप्रतिचर्त्वस्यासिद्धत्वात्।यत्तुनमुनेइत्यत्रनेतियोगंविभज्या⁻सिद्धत्वमिहनेत्याहुः।तदपिन।असिद्धत्वेपिरूपसि
द्धौनिर्बाधायांयोगविभागस्यागतिकगतिभूतस्येहाश्रयणेप्रमाणाभावात्।आर्केस्यतइति।आङ॰उद्गमनइतितङ्॰लुक्रमोरितिनेट्।समसंबन्धीविधिरिति॰
समकर्मकविधानमितितुनोक्तम्।अनुवाद्ययोरपियथासंख्यस्येष्टत्वात्।समूलाकृतजीवेषुहन्कृञ्ग्रहः इत्यत्रयथा॥क्रोः॥कुकृदुकोः पूर्वान्तत्वा
त्प्राङ्॰क्सायेत्यत्रसात्पदाद्योरितिषत्वंन।सुगण्सायेत्यत्रनपदान्तादितिष्टुत्वंन।पुष्करेतीर्थविशेषेसीदतीतिपुष्करसत्।तस्यापत्यंपौष्करसादिरचा
र्थः।बाह्वादित्वादिञ्।अनुशतिकादित्वादुभयपदवृद्धिः।ङः सिधुट्।उभयनिर्देशेपञ्चमीनिर्देशोबलीयान्परत्वादित्यभिप्रेत्याह।सस्येति।शीतिसप्तमी
निर्देशस्तुलाघवार्थः।षट्त्सन्तइति।धुटः चर्त्वेनतकारः।यत्वाहुः।चयोर्द्वितीयाइतिपक्षेनस्थइतितन्न।चर्त्वस्यासिद्धत्वात् ॥
निर्देशस्तुलाघवार्थः।षट्त्सन्तइति।धुटः चर्त्वेनतकारः।यत्वाहुः।चयोर्द्वितीयाइतिपक्षेनस्थइतितन्न।चर्त्वस्यासिद्धत्वात् ॥ षष्ठ्याः प्रयोगस्त्वकर्तव्यइत्यर्थः॥ 
तत्त्वमित्यसंभवरूपविरोधेपरत्वेनव्यवस्थेतिसस्यागमित्वनिर्णयइतिभावः।स्पष्टंचेदंतस्मिन्निितिसूत्रेभाष्ये।लाघवार्थइति।
चर्त्वस्यासिद्धत्वादिति॥अतएवतुडितिनोक्तम् ॥

अतएव।चर्त्वस्यासिद्धत्वादेव।ननुधुक्ङः सीत्यस्तुसप्तमीचयथाश्रुतैवङ इतिचषष्ठ्यन्तं,परमार्थतोवाक्यशक्त्यङ्गीकारेणपूर्वान्तत्वेपरादित्वेवानशक्ततावच्छेदकभेदोत
आह॥धुटः परादित्वमिति।श्चोततिरुपदेशेसादिः।श्रुत्वस्यधुटिसिद्धत्वेपितुकोसिद्धत्वात्सन्श्चोततीत्यत्रतुग्नेतिबोद्ध्यम्॥षष्ठींकल्पयतीति॥नचशीतिसप्तमीनिर्देशोलाघवार्थः।
अतएवधुडुभावेषट्सन्तइत्यत्रटस्यठोन।टकारनकारविसर्गाणांद्वित्वविकल्पात्षोडश।स्वयः शरइतिसकारद्वित्वेद्वात्रिंशत्।नचतत्रचर्त्वस्यासिद्धत्वंशङ्क्यं
म्।पूर्वत्रासिद्धीयमद्वित्वइत्युक्तेः।नचशरोचीतिद्वित्वनिषेधःशङ्क्यः।तस्यसौत्रद्वित्वमात्रविषयत्वात्।अतएवशरः खयइतिवार्तिकस्यवत्सरःअप्सराःइत्यु
दाहरणंभाष्येस्थितम्।धुटः परादित्वंनपदान्तादितिष्टुत्वनिषेधार्थम्।अतएववक्ष्यमाणस्तुगिहैवनकृतः।यत्त्वाहुः।एवमपिप्रक्रियालाघवार्थंतुडेवकर्तुमुचित
इतितन्न।चयोद्वितीयाइतिपक्षेथकारापत्तेः।श्चुत्वंधुटिसिद्धंवाच्यम्।अटतीत्यटुश्चोतति।इहधुणन।शितुक्।शीतिसप्तमीपूर्वत्रकृतार्थायानइतिपञ्चम्याःष
ष्ठींकल्पयतीत्याह।नस्येति।ननुप्रकृतोधुडेवास्तुकिंतुका।मैवम्।शम्भोटीत्यस्यहिपदान्ताज्झयःपरस्यशस्यछइत्यर्थआकरेस्थितः।एवंचधुटःपरादित्वात्स
ञ्छम्भुरित्यत्रछोनस्यात्।विपूर्वाद्रपेरौणादिकेशप्रत्ययेमध्यश्चोतन्त्यभितोविरप्शमित्यादौयथा।अतःपूर्वान्तस्तुक्कृतः।नन्वेवंकुर्वञ्छेतेइत्यत्रपदान्तस्ये
तिणत्वनिषेधोनस्यादितिचेन्न।कार्यकालपक्षेबहिरङ्गत्वेनतुकोसिद्धत्वात्।यथोद्देशपक्षेस्तोश्चुनेतियोगोविभज्यतेनेतिवर्ततेणइतिच।स्तोश्चुनायोगेणत्वंन
स्यात्नकारार्थमिदम्।सकारग्रहणंवर्गग्रहणंचोत्तरार्थम्।ततश्चुरितिपूर्वमनुवर्तते।एवंनश्चेतिसूत्रेकुर्वन्त्सीदतीत्यत्रपदान्तस्येतिणत्वप्रतिषेधोधुटःप
रादित्वेप्रयोजनमितिप्राचांग्रन्थोपियथोद्देशपक्षेबोद्ध्यः ॥७॥ द्वयोरचरितार्थत्वेलाघवेनान्यविभक्त्युच्चारणंयुक्तंनत्वन्यथेत्याशयात्।धुडेवास्त्विति।शीतिचषष्ठ्यर्थेइतिभा
वः॥विरप्शमिति।क्रान्दसार्थमपिबहुशःसूत्रकृतोयत्नदर्शनादितिभावः॥णत्वंनस्यादिति॥एतद्दृष्ट्याश्चुत्वस्यासिद्धत्वंत्वनुवचनसामर्थ्यादितिभावः।त्रिपाद्यांसर्वे
ष्वपरिभाषाप्रवृत्तोपक्षद्वयेपीदमेवसमाधानम्॥यथोद्देशपक्षेइति॥कार्यकालेतुअसिद्धत्वान्नदोषःपूर्वान्तत्वेपीतिभावः ॥

सञ्ज्ञायाम्।ङमिति प्रत्याहाररूपायाम्॥विकल्पद्वयस्यमद्धेद्इति॥विभाषामद्धेचयेविधयस्तेनित्याद्इतिपूङः क्त्वाचेतिसूत्रभाष्योक्तेरितिभावः।नचतन्मद्धेपाठेननित्यत्व
कल्पनेतन्मद्धपतितानांनपरेनइत्यादीनामपिनित्यत्वापत्तिः।स्वरितत्वबलादनुवृत्तस्यपुनर्वाग्रहणान्निवृत्तौकल्प्यमानायांस्वानन्तरएवतत्कल्पनेनोपपत्तावन्यत्रतत्कल्पनेप्र
नाभावात्।तस्मादुत्तरत्रवाग्रहणसामर्थ्यात्पूर्वसूत्रेएववाग्रहणस्यनिवृत्तिरितिभावः॥तन्निषेधादिति॥तस्यदोषइत्यस्यतुनप्राप्तिः।लत्वसाहचर्येणादेशणत्वस्यैवग्रहणा
यत्तुवदन्ति।इदंप्रयोजनंबहिरङ्गपरिभाषयागतार्थत्वात्प्रत्युक्तमितितत्पाक्षिकम्।त्रिपादिस्थे न्तरङ्गेबहिरङ्गपरिभाषेयंनप्रवर्ततइतिसुद्ध्युपास्यइत्युदाहर
णेस्वोक्त्यासहविरुद्धंचेत्यास्तांतावत्।सञ्च्चक्रम्भुरिति।इहश्चुत्वतुकोरसिद्धतामाश्रित्यनश्छवीतिरुत्वंनशङ्क्यम्।छत्वस्यासिद्धत्वात्।ङमोह्रस्वात्।ङम्प्रत्याहा
रःसञ्ज्ञायांचकृतेटित्वसामर्थ्यात्संज्ञिभिःसंबध्यते।तेनयथासंख्यंङ्णुट्णुट्नुट्प्रवर्तन्ते॥नित्यग्रहणंविस्पष्टार्थम्।हेमपरइतिमयउञोवेइतिचविकल्पद्वयस्य
मद्धेपाठादेवनित्यत्वलाभात्।सुगण्णीशइति।ण्यल्लोपौनस्थानिवत्पूर्वत्रासिद्धेनिषेधात्।ङमुटःपरादित्वंकुर्वन्आस्तेइत्यत्रणत्वप्रतिषेधार्थम्।अतएवङमोह्रस्वा
दचिङ्इतिनासूत्रि।परंणत्वंप्रतिपूर्वस्यद्वित्वस्यसिद्धतयाणत्वापत्तेरितिप्राञ्चः।यत्त्वाहुः।बहिरङ्गपरिभाषयागतार्थत्वादुभयमप्यसङ्गतमिति।तदपि
पाक्षिकम्।रात्तइत्यत्रेवयथोद्देशेत्रैपादिकेन्तरङ्गेपरिभाषाविरहस्योक्तत्वेनप्राचांग्रन्थस्यसौष्ठवात्। ॥
त्।पञ्चमीसमासस्यानित्यत्वाच्चेत्यपिबोद्ध्यम्।परादित्वमिति।ततःपरस्याचइतिव्याख्यानेनेत्यर्थः।ङमइत्यस्यषष्ठ्यन्तत्वमाश्रित्यङमन्तपदावयवस्यह्रस्वात्प
रस्यङमोङमुडजादौपदेइत्यर्थेनपूर्वादित्वमेवकुतोनकृतम्।पदस्येतिचमादुपधायाइत्यादाविवावयवषष्ठी।अजादौपदेइत्युक्तेर्नाअभ्यासेइत्यतःशतरिम्नानि
त्यादावनन्त्यस्यनेतिभावः॥बहिरङ्गपरिभाषयेति॥नुटोबहिरङ्गतयाऽसिद्धत्वादित्यर्थः॥उभयम्।ङमुटःपरादित्वंह्रेइतिसूत्रकरणंच।पाक्षिकम्।कार्यका
लसंबन्धि ॥

दिगिति॥ दिगर्थस्तु तत्परिभाषायास्त्रिपाद्यामभाव एव। किंच यदि यदागमा इति न्यायेनागमानामागमिधर्मवैशिष्ट्यमपि बोध्यत इति। तेन नकारान्तावयवत्वनस्यापि पदान्तत्वाण्णत्वनिषेधसिद्धिरित्युच्यते तर्हि ह्रस्वात्परस्य ङमन्तपदस्याचि परे ङमुडित्येवार्थस्तथा सति स्यान्न प्रागुक्तमिति महदनिष्टमिति स्पष्टं चेदं सर्वं भाष्ये॥ प्रत्ययलक्षणप्रतिषेधादिति॥ इदं च प्रकृतसूत्रे भाष्ये स्पष्टम्। अनुसर्तव्यत्वादिति॥ यदि तु स निषेधोऽपदादिविधाविति पर्युदासेन पदान्तत्वनिमित्तके विधावेवेति न

कथमन्यथा द्वियं त्रियं च स्वयमेवोक्तमिति दिक्। न गुपूरमदण्डिनावित्यादौ अन्तर्वर्तिविभक्त्या पदत्वान्नुड्स्यादिति चेन्न। उत्तरपदत्वे चापदादिविधाविति प्रत्ययलक्षणप्रतिषेधात्। अत एव परमवाचौ परमगोदुहौ परमलिहावित्यादौ कुत्वघत्वढत्वादीनि न। यत्तु प्राचा उञ्चि च पदे इत्यतः पदे इत्यनुवर्त्याजादेः पदस्येति व्याख्यानाद् ङमुडनेनेत्युक्तं तदनेन प्रत्युक्तम्। इहैव नलोपं वारयितुमुक्तरीतेरेव तेनाप्यनुसर्तव्यत्वात्। समः सुटि। यद्यपीमोऽनुस्वारेण सिद्धं तथाप्यनुनासिकत्वत्रिसकारत्वसिद्ध्यर्थमिदम्॥ अत्रानुनासिकः। अयमधिकारो विधिर्वेति द्वैतम्। आद्येऽत्रग्रहणमनर्थकम्। अधिकारादेव रुप्रकरणलाभात्। तु शब्दस्त्वधिकारपक्षे परस्मात्कार्यिणो विशेषद्योतनार्थः परस्य नित्यं रुत्वं पूर्वस्य तु वाऽनुनासिक इति। विधिपक्षे त्वर्थः ॥

लुमतेति सूत्रे भाष्ये स्पष्टम्॥ किंचोत्तरपदस्य कार्यित्वे एवं तत्र वृत्तिरत एव माषकुम्भवापेनेत्यादौ पदव्यवायेऽपीति निषेधसिद्धिरित्युच्यते तदा प्राचीनोक्तमजादेः पदस्येति व्याख्यानमेव शरणम्। स्पष्टं चैवं व्याख्यानं प्रकृतसूत्रे उञ्चि च पदे इत्यत्र च भाष्ये। तेन निषेधेन सिद्धमिति प्रकृतसूत्रभाष्योक्तिस्त्वेकदेशिन इत्यास्तां तावत्। त्रिसकारकत्वेति॥ न च पुनर्द्वित्वेन तदपि सिद्धम्। लक्ष्ये लक्षणस्येति न्यायात्। अत्रेदमेव ज्ञापकं बोध्यम्। अनर्थकमिति। इदमुपलक्षणं प्रतिसूत्रमावृत्तौ गौरवं चेत्यपि बोध्यम्।

स्पष्टार्थमिति॥अनेनतुग्रहणमधिकारपक्षेपिपरस्वरूस्ततः पूर्वस्यानुनासिक इत्यर्थस्यस्पष्टंबोधनार्थंवाशब्दवदितिसूचितम्।विधिपक्षेत्रग्रहणंतुएतद्दुप्रकरणे इत्यर्थलाभा
र्थम्॥वस्तुतोत्राधिकारत्वमेवोचितम्।मतुवसोरुरितिसूत्रेकृतयोर्वन्उपसंख्यानंविभाषाभवदित्यनयोरुदाहरणेभाष्येऽनुनासिकाद्यनुच्चारणात्।विधित्वेतुतत्रप्रवृत्तिर्दुर्वारैव।
अधिकारत्वेतूत्तरत्रैवप्रवृत्तिः स्पष्टंचेदंस्त्नाविततत्त्वम्॥ल्यब्लोपेइति॥दिग्योगलक्षणात्तुन।अत्रानुस्वारपरानुनासिकः पूर्वस्यतुवेतिन्यासेनसिद्धावनुनासिकात्परइत्यस्यवैय

वाग्रहणंस्पष्टार्थम्।अनुनासिकात्परइतिज्ञापकादेवसिद्धेः।नहिविकल्पंविनाऽनुनासिकाभावपक्षइतिसंभवति।इदमेवध्वनयितुंवृत्तौतुवेतिशब्दौनोक्तौ।अ
नुनासिकात्।ल्यब्लोपेपञ्चमीत्याह।अनुनासिकंविहायेति।एवंचसंसर्गवद्विप्रयोगस्यापिविशेषावगतिहेतुत्वाद्वत्स ॥ नीयतामित्यत्रैवसंभाविताऽनुनासि
कगुणकएवउपस्थितत्वादाकाङ्क्षितत्वाच्चावधित्वेनसंबध्यतइत्यभिप्रेत्याह।रोःपूर्वस्मादिति।अनुस्वारागमइति।आगमत्वंचपरशब्देनैवलभ्यतेपूर्वौत्तुलाभ्या
मैजित्यत्रपूर्वशब्देनैचोरिवेतिभावः।विसर्जनीयस्य।खरीति।एतच्चमण्डूकप्लुत्याखरवसानयोरितिसूत्रादनुवर्तते।नन्वनुस्वारस्यानच्त्वात्ततः परस्यद्वित्वंनस्या
देवेत्यतआह। अनुस्वारविसर्गेत्यादि।अकारोपरीति।यदित्विकारोपरिपठ्येरन्तर्हिपयःसुयशःसुइत्यादौइणः परस्येतिषत्वंस्यादितिभावः।अच्त्वादिति।नचैवं
हरिःकर्ताहरिंस्मरेदित्यादौयणादिप्रसङ्गः।त्रिपादीस्थत्वेनविसर्गादीनामसिद्धत्वात्।अनुस्वारस्यापिद्वित्वइति।अपिशब्दात्ककारस्य॥ थ्यापत्तेरितिभावः॥परशब्देनैवे

ति॥प्रसिद्धावेवकारः॥मण्डूकेति॥एकदेशेस्वरितत्वप्रतिज्ञयेत्यपिबोध्यम्।अतएवावसानेनसः।पूर्वेणसंनिकर्षरूपासंहितात्ववसानेप्यस्त्येव।अतएवसंहिताधिकारेऽवसानकार्य
पाठःसंगच्छते॥षत्वंस्यादिति। अतएवपुंस्वित्यादावुकारंनिमित्तीकृत्यानुस्वारव्यवधानेषत्वमाशङ्क्यनुम्स्थानिकानुस्वारस्यैवनुम्विसर्जनीयेतिसूत्रेग्रहणान्नेतिभाष्यंसंगच्छते।इका
राद्युत्तरंपाठेहिअनुस्वारमिणंगृहीत्वाषत्वंदुर्वारंस्यादितिभावः॥यणादीति।पूर्वसवर्णदीर्घ आदिशब्दार्थः।अयंपाठोऽनित्यः।अट्कुप्विति सूत्रेनुस्वारोपलक्षणनुम्ग्रहणात्।अतएवहरिं

जयतीत्यादौ भल्लांजश्रुभश्यीतिनेतिबोद्धामिति कश्चित्॥

भवत्येवेति॥एकस्यद्वितीयोच्चारणस्यैकेनसाधुत्वबोधनंतयोर्मध्येपरस्यद्वितीयोच्चारणस्यान्येनसाधुत्वबोधनमितिभावः॥वक्ष्यमाणरीत्येति॥प्रत्ययस्थयोर्योविसर्गइतिव्याख्याद
र्शरीत्येत्यर्थः।वस्तुतस्तदसङ्गतम्।कश्चिभिःकृतमित्यादौदोषापत्तेः।एतच्चान्वयेत्वितितुनारुचिबोधकेनसूचितम्।यदातुसूतेःसस्यकारोन्त्यस्यह्रस्वोप्सुःप्रत्ययइतिस्त्रियामिति

वचनान्तरेणेति।अचोरहाभ्यामितिकृते॥द्वौमकारावितिभवत्येवेतिभावः।पुमःखयीति।पुंसःसयोगान्तलोपेकृतेऽवशिष्टभागस्येदमनुकरणम्।पर्युदासादिति।
इदुदुपधस्येतिषत्वविधायकेसूत्रइतिभावः।अप्रत्ययस्थयोर्विसर्गइतिवैयधिकरण्येनव्याचक्षाणानांप्राचांमतेनेदम्।वक्ष्यमाणरीत्यासामानाधिकरण्येना
न्वयेतुषत्वप्राप्तावितिबोध्यम्।ख्याञादेशइति।आदेशोहिउपदेशेख्शादिः।असिद्धप्रकरणेणत्वानन्तरंख्शाञःशस्यषत्वंविकल्प्यते।तेनसुप्रख्येननिर्दंतसौप्रख्यंत
त्रभवःसौप्रख्यीयः।यत्वस्यासिद्धत्वाद्वृद्धपोपधादितिवुञ्नेत्यादिप्रयोजनान्याकरेस्थितानि।एवंचयत्वस्यासिद्धतयाऽम्परत्वाभावात्पुमःखयीतिरुत्वंनेत्यर्थः।पुंख्या
नमिति।चक्षिङोल्युट्ख्याञादेशः।नन्वादेशइहदुर्लभः।वर्जनेप्रतिषेधःअसनयोश्चेतिवार्तिकादितिचेत्।सत्यम्।बहुलंतण्यन्त्रबधकगात्रविचक्षणाजिराद्यर्थंमि
तिवार्तिकेबहुलग्रहणात्समाधेयम्।तथाचख्शादित्वप्रयोजनगणनवार्तिकम्।रुविधिःपुंख्यानमिति।णत्वंपर्याख्यानमिति।निष्ठानत्वमाख्यातेइतिच।शकारेण
व्यवधानात्कृत्यचइतिणत्वंन।तथाआख्यातइत्यत्रसंयोगादेरातइतिनत्वंन।यत्वस्यासिद्धायणवत्ताविरहात्।एवंचनड्याख्येतिसूत्रेख्याग्रहणंनकर्तव्यमि
तिभावः।नचख्याप्रकथनेइत्येतदर्थंतदितिवाच्यम्।तस्यसार्वधातुकमात्रविषयत्वात् ॥ ✓ सूत्रभाष्यकैयटोक्तव्युत्पत्तिस्तदासस्यलोपेमस्येवप्रत्ययस्व
मितिव्याख्यादर्शोक्तसामानाधिकरण्येयिषत्वाप्राप्तिरेव।पातेर्डुम्सुन्नितिव्युत्पत्तिमादायतुमूलमितिदिक्॥शकारेणेति॥यत्वासिद्धत्वादितिभावः॥नकर्तव्यमिति॥
यत्वासिद्धायणवत्ताविरहेणनत्वाप्राप्तेरितिभावः ॥

अत्र चेति॥ख्यातेः सार्वधातुकमात्रविषयत्वेइत्यर्थः॥ सञ्ज्ञेति॥एवंचनदुत्तरभावप्रत्ययेनसस्थानशब्दउच्यते।नेनस्ववाच्योजिव्हामूलीयोवार्त्तिकेलक्ष्यते।कुखंकस्मान्नभवती
त्यत्रैवेतिभावः।कृशादीतिपाठेप्रयोगेचर्त्वप्रवृत्तिरितिभावः॥इत्युक्तत्वादिति॥एवंचमाधवेनेष्टापत्तिंकर्तुमर्हइत्यर्थः॥अनभिधानस्येवेति।ख्शादेरनभिधानस्यैवेत्यर्थः॥गौ
रवेति॥ख्शादित्वस्वीकृत्यानभिधानस्वीकारापेक्षयातदस्वीकृत्यैवख्यातेरार्धधातुकेऽनभिधानस्यैवस्वीकारेलाघवमितिभावः।रुत्वमित्युपलक्षणंजिह्वामूलीयस्यषत्वस्यच॥
अत्रचसस्थानत्वंनमःख्यात्रेइत्युत्तरवार्तिकंप्रमाणम्।सस्थानइतिजिह्वामूलीयस्यप्राचांसञ्ज्ञा।सइहनाशर्परेविसर्जनीयइत्यस्यप्रवृत्तेरितिभावः।यदिस्व
तन्त्रोपिधातुरार्द्धधातुकेइष्येतततदाजिह्वामूलीयस्यदुर्वारतयेदंवार्तिकमसंगतंस्यात्।यत्तुहरदत्तमाधवादिभिरुक्तंख्याधातुरपिख्शादिर्यत्वविधिरप्युभय
साधारणइति।तच्चिन्त्यम्।भाष्येचक्षिङएवोपक्रमात्सार्वधातुकेपिख्शादिप्रयोगापत्तेश्च।नचेष्टापत्तिः।माधवेनार्द्धधातुकेएवायंख्शादिरित्युक्तत्वात्।सार्वधातुके
ऽनभिधानस्यैवशरणीकर्तव्यत्वापत्त्यागौरवग्रस्तत्वाच्चेत्यास्तांतावत्।स्यादेतत्।बहवःपुमांसोस्मिन्कुलेबहुपुमख्यातीत्यत्ररुत्वंस्यात्।उरःप्रभृतिषुपुमशब्दस्यै
कवचनान्तस्यैवपाठान्नेह्कप्।सार्वधातुकेचख्यातेःप्रयोगोनिर्बाधएवेतिचेत्।दृष्टापत्तेः।संहितायाअविवक्षायांतुरुत्वंनेतिस्पष्टमेव।यत्तुप्राचाख्याधातौनेतिकेचि
दित्युक्तंतत्रयदिख्याआदेशोइत्यर्थस्तर्हिकेचिदित्यनुचितम्।स्वतन्त्रेधातौचेत्तर्हिसार्वधातुकविषयेपिनिषेधःस्यात्।नचेष्टापतिःनिर्मूलत्वात्।चक्रीँस्त्रायस्वेति।यत्तुप्राचा
त्राहीत्युक्तंतत्रपरस्मैपदमयुक्तम्।त्रायतेर्ङित्वात्।त्रायतइतित्राःसइवाचरतीत्यर्थेकर्तरिक्विबन्तादाचारक्विपिवाबोध्यम्।प्रशानिति।प्रपूर्वाच्छाम्यतेःक्विप् ॥
नमःख्यातिनिःख्यातीत्यादौ॥त्रायतेर्ङित्वादिति॥अत्रायतेइत्युक्त्वासत्यपिपरस्मैपदेत्रायेत्यस्यप्राप्त्यात्राहीत्यस्यासिद्धिःसूचिता॥आचारक्विपिवेति॥नामधातौमूलधात्वादेर्ङि
त्वाद्याश्रित्यानुदात्तङितइत्यादेःप्रवृत्तिर्नेत्यभिमानः।अतएवत्राहिमांपुण्डरीकाक्षेतिसंगच्छतेइतिभावः।आर्षंतत्रतदित्यन्ये॥शाम्यतेरिति॥ननुशानतेजनेइत्यतःतस्यपदान्तेनलोपेन
नान्तत्वासंभवादितिभावः।नचाप्रशानितिपर्युदासेननान्तग्रहणेसिद्धेनइतिव्यर्थमितिवाच्यम्।अस्यलक्षणवशसंपन्ननान्तत्वेनपर्युदासेनापिलक्षणवशसंपन्ननकारान्तानामेवापत्तेः॥

ननु कुप्वोरित्यत्र जिह्वामूलीयस्य खर्त्वाद्विसर्गे तस्य सत्वे सत्यश्रवणापत्तिरत आह॥ सूत्रे इत्यादि। शर्त्वादित्यन्तेन। विसर्गलोपश्च सत्वापवादः। एवं च सूत्रे निर्विसर्गपाठ इति भावः। सविस र्गपाठेप्याह॥ वा शरीति॥ स च सत्वापवादः। खर्पर इति चन्नैकल्पिकमिति भावः॥ उच्चारणार्थाविति॥ तयोरुच्चारणस्य तौ विनाऽसंभवेन नान्तरीयकतयोरुच्चारणं न तु तयोर्विधेयत्वम्। किं तु तन्मात्रेण तयोर्लक्षणाव्याख्यानादिति भावः॥ चाद्विकल्प इति॥ निपातानामनेकार्थत्वाच्चशब्दो विकल्पार्थ इति तदाशयः॥ सत्वप्रसङ्गादिति॥ चानुकृष्टविसर्गस्तु सत्वापवा
अनुनासिकस्य क्वीति दीर्घः। मो नो धातोरिति नः। तस्यासिद्धत्वान्नलोपो न। नॄन्ये। पकारोपर्यकार उच्चारणार्थः। तेन नॄः पुनातीत्यादि सिद्धम्। उभयथर्क्ष्वित्यतः उभय
थेत्यनुवृत्तेर्विकल्पः फलितइत्याशयेनाह। रुः स्याद्वेति। कुप्वोः। सूत्रे खर्परत्वाद्विसर्गः। जिह्वामूलीयस्य खर्त्वात्। खर्परे शरीति विसर्गस्य लोपः। जिह्वामूलीयस्य श
र्त्वात्। वा शरीति विसर्ग एव वा। आदेशयोः कपावुच्चारणार्थौ। चाद्विसर्ग इति। यत्तु प्राचा चाद्विकल्प इत्युक्तं तन्न। ≍क≍पाभ्यां मुक्ते विसर्गस्य सत्वप्रसङ्गात्। कानाम्रेडि
ते। कान्कानीति वाच्ये आम्रेडितग्रहणं यत्र द्विरुक्तिस्तत्रैव यथा स्यादिह मा भूत्। कान्कान्पश्यसि। अत्रैकः किंशब्दः प्रश्ने द्वितीयः क्षेपे। कान्कुत्सितान्पश्यसीत्य
र्थः। कस्कादिषु च। अत्र प्राचा विसर्जनीयस्य ≍क≍पौ नेत्युक्तं नासौ सूत्रार्थः। ≍क≍पयोरस्वरितत्वात्। नञश्चाप्रकृतत्वात्। किं त्वार्थिकार्थकथनं तदिति ध्वनयन्नाह। ≍
क≍पयोरिति। कौतस्कुत इति। कुतः कुत आगत इत्यर्थेऽव्ययात्यपि प्राप्ते गणपाठसामर्थ्यादण्। सर्पिष्कुण्डिकेति। नित्यं समास इत्येव सिद्धे इह पाठस्य प्रयोजनं तु तत्रै
व वक्ष्यते। सेनासुरेति। यदि हि कस्य तुक् स्यात्तर्हि कस्य चर्त्वे सति चद्वयं स्यात्। सन्निपातपरिभाषया चर्त्वाप्रवृत्तौ तु ककारोपरि चकारः श्रूयेतेति भावः॥ इति हलसन्धिः॥
द इति नास्माकं दोष इति भावः॥ गणपाठसामर्थ्यादिति॥ एतेन पञ्चम्यन्तात्स्वार्थे तसिल्विधानेनाव्ययादुत्सर्गतः प्रथमैकवचनोत्पादेन पञ्चम्यन्तत्वाभावात्तत आगत इत्यर्थे कथ
मणित्यपास्तम्। अव्ययानामिति टिलोपः। संनिपातेति॥ असिद्धविषयेपि सा प्रवर्तते। यद्वा पूर्वत्र कर्त्तव्ये सिद्धत्वेपि तत्रकृते उत्तरस्यासिद्धत्वे मानाभाव इति नासिद्धत्वे न सन्निपा
तपरिभाषाप्रवृत्तिप्रतिबन्धः शङ्क्य इति भावः। वैकल्पिके षपिभावानुष्ठाने स्यैवौचित्यं फलाधिक्यायेति तात्पर्यम्॥ इति हल्सन्धिः॥

नेत्येवोच्येतेति॥कुप्वो रित्यत्रापि चेन सत्वं नेत्येवानुकृष्टत्वमिति भावः॥स्यातामिति॥सत्वनिषेधे खरवसानयोरिति विहितविसर्गस्य सत्त्वादिति भावः।विकारमात्रमिति॥तत्सामर्थ्या
च्चेन तस्यैव प्रत्यापत्तावपि न ता वितिभावः।एतेनैतद्विहितस्य स्थानेपि तौ स्यातामा।किंचास्यैव तौ स्यातां खरवसानयोरिति विहितस्यत्वे तयोरसिद्धत्वाद्विसर्जनीयस्येति सत्वमेव स्यादि
त्यपास्तम्।अर्थाधिकारेण खरवसानयोरिति विहितविसर्गस्यैवादेशाच्च।विसर्जनीयस्य सो शर्परे इतितुन सूत्रं कृतम्।वाशरीत्यनेन सत्वविकल्पेन सिद्धावपि कुप्वोरित्यत्रा शर्परे इ
त्यनुवृत्त्या तयोः शर्परे ऽप्रवृत्तावपि कुप्वोरिति सूत्रेचाद्विसर्गलाभानापत्तेः।व्यत्ययेनेति॥सौत्रत्वादिति भावः।इतिक्लेश इति॥किंच पूर्व्वत्रेत्यादौ षत्वादिवारणाय कुप्वो रित्यनुवर्त्य
शर्परे।सत्वादेरयमपवादः।यदि तु शर्परे नेत्येवोच्येत तर्हि प्रकृते सत्वे निषिद्धे पि कुप्वोः ꣵक ꣶ पौ स्याताम्।वासःक्षौममद्भिः प्सातमिति।विसर्जनीयवचनात्तु वि
कारमात्रं बाध्यते इत्याशयेनाह।नत्वन्यदिति।तदेव स्फुटयति।इहेति।सोपदादौ।अपदाद्योरिति।सूत्रे तु व्यत्ययेनैकवचनम्।यदि तु स्वरविशेष्यतेऽपदा
दौ खरीति तदा यथाश्रुतं साधु।किंतु खरीति मण्डूकप्लुत्यानुवर्त्यमिति क्लेशः।नचानुवृत्तेरुत्तरत्राप्यावश्यकता।स्वरं विना विसर्गस्य दुर्लभत्वेन तदनुवृत्तेर्निष्फ
लत्वात्।पाशकल्पककाम्येष्विति वृत्तिः।संभवदर्शनमेतन्नतु परिगणनम्।अन्यस्यासम्भवात्।प्रातःकल्पमिति।अधिकरणशक्तिप्रधानस्यापि प्रातःशब्दस्ये
ह वृत्तिविषये शक्तिमत्परत्वम्।दोषाभूतमहः दिवाभूता रात्रिरितिवत्।गीःकाम्यतीति।इहेणःष इति षत्वं न।तत्रापि काम्येरोरेवेत्यस्यानुवृत्तेः।यदि
तु तत्रैवेदं पठ्येत तर्हि षत्वमात्रप्रतिषेधोपि पूर्व्वेण सत्वं स्यात्॥ ५७ तदन्तर्गते खरीति व्याख्याने सुतरां क्लेश इत्यपि बोध्यम्॥अन्यस्यासंभवादिति।अयं
भावः।अपदे इत्येव कुप्वोरित्यनुवर्त्य यस्मिन्विधिरिति परिभाषया कपवर्गादौ अपदे इत्यर्थेन सिद्धे आदिग्रहणमपदस्यैवादिरित्यर्थलाभार्थं तेनोरः कायतीति विग्र
हे सुबुत्पत्तेः पूर्वं समासे प्सुरः कैपोत्यत्रैन सत्वम्।आदिग्रहणसामर्थ्येन तल्लब्धावधारणेन च पदत्वयोग्यप्रातिपदिकानवयवस्यैव ग्रहणादिति॥शक्तिमत्परत्वमिति॥
अव्ययत्वं तु भूतपूर्वगत्या बोध्यमिति भावः॥षत्वं नेति॥सत्वं नेत्यपि बोध्यम्॥तत्रापि।षत्वविधावपि।एवं चात्र पाठात्तत्रानुवृत्तेश्चोभयमपि नेति बोध्यम् ॥

समुदायस्येति॥ अचोन्त्यादिति सूत्रे अत्रैव वाचकान्त्यशब्देन समुदायस्याक्षेपेण उपधात्वस्य समुदायनिरूपितत्वादिति भावः॥ इदुदुपधस्य विसर्गान्तस्य पदस्येति सामानाधिक
रण्येनान्वयः। षत्वं तु लोन्त्यस्येत्यनेन विसर्गस्येत्यन्ये। व्याख्यादर्शोक्तरीत्याह॥ अप्रत्ययो यदि॥ तत्र सिद्धेरिति॥ विसर्गस्य प्रत्ययत्वप्रसिद्धेरित्यर्थः॥ नन्वादिति॥ रोः सुपीत्येव पदत्वाप्रवृत्ते
रिति भावः॥ चरितार्थ इति॥ ननु तत्रापि प्रथमैत्यत्वस्यान्तवत्पदत्वस्यातिदेशेनैव सुलोपे कृते आनयनमिति को विशेषः। नचैकदेशविकृतन्यायेन सिद्धिः। अग्निरित्यत्रापि समत्वात्। न चाग्निरि
त्यत्रादेशस्यातिदेशलभ्यकार्यस्याप्रसिद्धत्वम् अत्र तल्लभ्यकार्ये ... इति विशेष इति वाच्यम्। सर्वथातिदेशापेक्षणेन तस्याकिंचित्करत्वात्। किं च रुत्वासिद्धत्वेनाग्निरित्यत्र पदत्वं सुलभम्। किं च विस
र्गस्यान्यत्र रूपेरेफवृत्तिप्रत्ययत्वस्य स्थान्यन्तर्धर्मत्वेन तदतिदेशेन ... इति प्रत्ययरूपो विसर्गो दुर्लभः। स्पष्टा चेयं रीतिर्भिर्भगोरिति सूत्रे भाष्ये। किं चैवं सामानाधिकरण्ये सोरिति वक्तव्ये प्रत्य
इणः षः। पूर्वस्यापवादः। इदं सूत्रं सहेति च ह्रस्वात् ... तत्रानुवर्तते तेन यथासंभवमिणः परस्य षोन्यस्येति विवेकः। पुरः प्रष्टव्या इति। पॄ पालनपूरणयोः। भ्राजभासेत्यादिना क्विप्। तदन्ता
न्नम्। जसन्ततां सुटि कर्त्तुं पुः पुरावित्यन्यस्तम्। इदुदुपधस्य इदुतौ उपधे यस्य समुदायस्य तस्यावयवो यो विसर्जनीय इति वैयधिकरण्येन संबन्धः। अप्रत्ययस्येति तु अप्रत्ययो यो विस
र्ग इति संबध्यते। संभवति सामानाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्। न च विसर्गस्य प्रत्ययत्वमप्रसिद्धमिति वाच्यम्। अग्निः करोतीत्यादौ स्थानिवद्भावेन तत्प्रसिद्धेः। न चानिदेशं प्रति त्रिपा
द्या असिद्धत्वं शङ्क्यम्। अप्रत्ययस्येति निषेधेनैव सिद्धत्वज्ञापनात्। अत एवाग्निरित्यादेरोर्विसर्गः सिद्ध्यति। अन्यथा अपदान्तत्वान्न स्यात्। विसर्गविधिस्तु पुनरित्यादौ चरितार्थः॥ ७ यग्रहणं व्यर्थं स्या
त्। किं चैवं नित्यसमासेऽनुत्तरपदस्थस्येत्यस्य वैयर्थ्यम्। परमसर्पिः कुण्डिकेत्यादावनेन षत्वस्य दुर्वारत्वात्। किं चैवं नित्यं समासे इति सूत्रस्य भाष्यासंगतिः। तथा हि। अयाकृस्यन्नं प्रातिपदिकं स
र्पिरादि तस्मिन्नित्ये प्राप्ते इसुसोः सामर्थ्ये इति विभाषा आरभ्यत इति हि तत्रोक्तम्। प्रत्ययत्वपर्यायाधिकरणभिन्नस्येत्यर्थे तु प्रतिप्रसवेपि नित्यषत्वप्राप्तेरभावात्तदनुपपन्नमित्यादेरसंगतिः स्पष्टैव। अत्र भाष्ये येति
यद्यर्थे तेन सर्पिषामग्रे पेस्यादौ षत्वसिद्धये तुल्यसामर्थ्येन त्वसादिति सूचितम्। तस्मादत्र प्रत्ययपदं तत्संबन्धि परं प्रत्ययसंबन्धिभिन्नस्य विसर्गस्येत्यर्थे उचितः। अत एव कैश्चित् कृतमित्यादौ न दोषः॥
नित्यं समास इति। अस्यानुत्तरपदस्थस्येत्यस्य कस्कादिषु सर्पिष्कुण्डिकाशब्दपाठस्यैतदर्थत्वात्प्रकृतेनैवासिद्धेनेति चेत्सत्यम्। व्याख्यादर्शानुसारेणेत्थं न्यसस्त्वात्तस्य न मन्वस्यति। नातीवादर्तव्यमिति॥

नप्रवर्तत इति। अत एव तिरश्चेत्यादौ सस्य श्चुत्वसिद्धिः। एतच्चेष्टानुरोधेन संयोगादिलोपसत्वणत्वातिरिक्तविषयं तेन तत्र स्थानिवत्त्वं भवत्येवेति न स्य दोष इत्याद्यपि न वाचनिकमिति भावः॥ मातुः कार्यमिति॥ सिद्धान्तव्याख्यानेप्यत्र दोषः। तथाहि। सकारसन्निधावकारेणैव प्रत्ययः समुदायनिवेशित्वात्प्रत्ययत्वस्येति तदादेशस्योरः प्रत्ययत्वाभावेन विसर्गस्य तत्संबन्धित्वाभावात्। यस्तूत्वे कृते वशिष्टः सकारः प्रत्ययसञ्ज्ञकः सलु प्र एव। न चान्तादिवच्चेत्यस्य पूर्वस्य परस्य समुदायस्यान्तादिभ्यां वर्णाभ्यां पृथगवस्थिताभ्यां येव्यवहाराः प्रत्ययत्वादयस्ते एकादेशविशिष्टस्यापीत्यर्थादुरसित्यत्र प्रत्ययत्वस्य सुलभतया एकदेशविकृतन्यायेनोरित्यस्य प्रत्ययतया न दोष इति वाच्यम्। त्रिपाद्या असिद्धत्वेन तत्रान्तवत्त्वाप्रवृत्तेः। स्थानिवत्त्वेन तु न निर्वाहः। उपात्तस्य स्थानिनोऽकारस्य प्रत्ययत्वाभावात्। प्रत्ययसंबन्धित्वं तु न स्थानिवत्त्वलभ्यमशा

ज्ञापकं च विशेषापेक्षम्। तेनाचः परस्मिन्निति पादौ न प्रवर्तते। एवं च पूर्वत्रासिद्धेन स्थानिवदिति सिद्धान्त उक्तयुक्तिमूलको न तु वाचनिक इति प्रपञ्चितं शब्दकौस्तुभेस्माभिः। नन्वेवं मातुः कार्यमित्यादौ षत्वं स्यादिति चेन्न। कस्कादिषु भ्रातुष्पुत्रशब्दस्य पाठेन ङसिङसोरत उकारात्परस्य सस्य षत्वं नेति ज्ञापनात्॥

ल्वीयत्वात्। सर्वे सर्वपदादेशा इति न्यायेन मातृअसि इत्यस्य स्थानित्वे ष्यसित्यस्य स्थानित्वाऽलाभे नोरसित्यस्य प्रत्ययत्वमलभ्यमिति। एतदेवाभिप्रेत्य प्रकृतसूत्रे उरण् रपर इति सूत्रे च भाष्ये उक्तमिह कस्मान्न भवति पितुः करोति अप्रत्ययस्येति षत्वं प्राप्नोति अप्रत्ययविसर्जनीयस्येत्युच्यते प्रत्ययविसर्जनीयश्चायं लुप्यते तत्र प्रत्ययविसर्जनीयोऽग्रात्तस्येति। लुप्यते त्रेत्यादेरयमर्थः। प्रत्ययविसर्जनीयत्वेन यस्त्वाभिमतः स लुप्यते न दृश्यते स्थानिनः प्रत्ययस्यैव लोपादिति बोद्धव्यम्। ज्ञापनादिति॥ त्रिपाद्यामप्यन्तवत्त्वप्रवृत्तिज्ञापनद्वारेति भावः। अत एवामीक्षीरपेणेत्यादौ मीत्वणत्वे सिद्ध्यतः। अत्रैकारस्यादसंबन्धित्वेपि इत्यस्यैकाजुत्तरपदत्वं चान्तवद्भावाधीनमिति बोद्धव्यम्॥

अधिकरणमेवेति॥प्रत्ययस्यसंबन्धीयो विसर्गस्तस्येनेत्यर्थइतितद्भावः।अगत्याचवाक्यभेदासमर्थसमासंवेयधिकरण्यान्वयरूपदोषत्रयसहनमितितदभिमानः॥नातीवेति॥वैयधि
करण्यान्वयफलस्यकविभिःकृतमित्यादेःप्रत्ययसंबन्धिभिन्नस्यविसर्गस्येत्येवंलक्षणयासाभानाधिकरण्येनापिसंग्रहसंभवादितिभावः।व्याख्यादर्शोक्तसामानाधिकरण्येतुलेशतोपि
तदद्राभावादतीवेत्यसंगतमेवस्यादिति।अनेनोक्तव्याख्यायाएवस्वाभिमतत्वंसूचितवानित्यलम्॥परस्परयेति॥एकादेशशास्त्रसंपत्तेरेकस्यानिकत्वेनविसर्गस्यैकादेशशास्त्रनिमित्त
कत्वमितिभावः॥प्रचुरःपाठइति॥ओषधीस्कुधीत्यादौशसैकादेशेकःकरत्करतिकृधीतिषत्वनिवृत्तिश्चतत्फलमुक्तम्।मूलेतुतस्यफलस्यछान्दसत्वाच्छन्दसिवाप्रेत्यतद्गुणःषद्रूत्वस्यनि
वृत्त्याःदोषाच्चषस्यन्तमेवपठितमितिदिक्॥ग्रामादिकमिति॥पदादित्वेनसोपदादावित्यस्याप्राप्तिरितिभावः।साहचर्यमिति॥नचरामलक्ष्मणावित्यादौदृष्टंसाहचर्यसंबंन्धस्याभि

एवंचाप्रत्ययस्येत्येतदपिव्यधिकरणमेवेतिहरदत्तेनोक्तंनातीवादर्तव्यम्।मातुरिति।अत्रहिऋतउदित्येकादेशशास्त्रंविसर्गप्रतिपरम्परयाप्रयोजकम्।आ
करेत्वेकादेशशास्त्रनिमित्तादितिप्रचुरःपाठः।तत्रएकादेशशास्त्रंनिमित्तंयस्यउकारस्यतस्मादित्यर्थः।मुहुःकामेति।इहकुपोः ≍क≍पावितिप्रवर्तते।एनोमु
हुस्कामेतिसकारःक्वचित्पठ्यतेतत्ग्रामादिकमितिहरदत्तः।हिस्त्रिश्चतुरिति।इहहित्रिभ्यांसुजन्ताभ्यांसाहचर्यात्चतुःशब्दोपिसुजन्तएवग्रहीष्यते।कृत्वो
र्थग्रहणंज्ञापकम्।साहचर्येनसर्वत्रव्यवस्थापकमिति ॥ ७ धानियामकत्वंदृष्टम्।नचैषांक्वापिसाहचर्यसंबन्धोगृहीतइतिकथमेतदितिवाच्यम्।पञ्चम्य
पाङ्परिभिरित्यनेनलक्षणादिद्योतकपरियोगेपञ्चमीशङ्कायांयद्यप्ययंपरिर्दृष्टापचारोवर्जनेचावर्जनेचायंखल्वपशब्दोःदृष्टापचारोवर्जनार्थएवकर्मप्रवचनीय
स्तस्यकःसहायोभवितुमर्हतिअन्योवर्जनार्थात्।यथास्यगोःसहायेनार्थइतिगौरेवानीयतेनाश्वोनगर्दभइतिकर्मप्रवचनीययुक्तइतिसूत्रस्यभाष्येणसदृशानामेव
प्रयोगेसहायत्वमित्यर्थस्यप्रतिपादनेनाक्षतेः।परिभाषायांसहचरितशब्देनसदृशस्यैवग्रहणंसहचरस्यभावःसाहचर्यम्।सहचरणंचसदृशयोरेवेतिसाहचर्यशब्देनसा
दृश्यमुच्यते।सदृशयोरेवसहविवक्षातयोरेवचसहप्रयोगः।रामलक्ष्मणावित्यादावपिसादृश्यमेवनियामकमितिदिक् ॥

अर्थवतश्चेति॥प्रतिपदोक्तस्यैवेत्यपि बोध्यम्॥नित्यं षइति॥भाष्यप्रामाण्येनात्राव्युत्पत्तिपक्षस्यैवाङ्गीकारेण व्युत्पत्तिपक्षे प्रत्ययसंबन्धित्वात्कथं षत्वमिति न शङ्क्यम्।अतएव
चतुष्पाद्गोढ त्रित्यादिनिर्देशसंगतिः॥इत्यर्थ इति॥अत्रत्यन्तत्वं पूर्वमसूचितम्॥तद्भाष्येति॥अनुत्तरपदस्थस्येति किं परमसर्पिः कुण्डिकेति नित्यं समासे इति सूत्रस्थभाष्ये इत्य
र्थः।आवन्तप्रयोगसूचितमर्थं स्फुटप्रतिपत्तये आह॥नत्वयस इत्यादि॥इति विसर्गसन्धिः॥तस्यप्रत्ययविधीति॥अतएव येनविधिरिति सूत्रे भाष्ये प्रत्ययविधिभिन्नेवृत्ति
तेन दीधीवेवीटामित्यत्र धातुसाहचर्येपि आगमस्येटो ग्रहणम्।उभयत्र विभाषा चेयम्।चतुरित्यस्य इदुदुपधस्येति प्राप्तेइतरयोस्त्वप्राप्ते।न च तयोरपि इसुसोः साम
र्थ्य इत्यनेन सिद्धिः शङ्क्या॥इसः प्रत्ययस्य अर्थवतस्तत्र ग्रहणात्।चतुष्कपाल इति।इदुदुपधस्येति नित्यं षः।अपेक्षाविरहेपीति।तिष्ठतु सर्पिष्कुण्डिकामानयेत्या
दाविन्यर्थः।अपेक्षायामिति।इदं सर्पिष्कुण्डिकाया इत्यत्रेत्यर्थः।यत्तु पारायणिका आहुः।कस्कादिषु सर्पिष्कुण्डिकादीनां पाठ उत्तरपदस्थत्वे विषत्वार्थ इति तद्भाष्य
विरोधादुपेक्ष्यम्।अयः सहितेति।नत्वयसो विकारः जानपदेति ङीषप्रसङ्गात्।अयस्कर्णीति।अयइव कर्णौ यस्याः।नासिकोदरोष्ठेत्यादिना ङीष्।अधः शिरसी ॥
एतयोरिति।सूत्रे तु षष्ठ्याः स्थाने प्रथमा बोध्या॥अधस्पदमिति।मयूरव्यंसकादित्वात्समासः।शिरस्पदमिति।षष्ठीसमासः॥इति विसर्गसन्धिः॥ससजुषो रुः।पदस्ये
त्यनुवृत्तं ससजूभ्यां विशेष्यते विशेषणेन तदन्तविधिः।न च सजूः शब्दांशे ग्रहणवता प्रातिपदिकेन तदन्तविधिर्नास्तीति निषेधः शङ्क्यः।तस्य प्रत्ययविधिविषयत्वात्।
सान्तं सजूष्शब्दान्तं च यत्पदं तस्य रुः स्यात् स चालोन्त्यस्य।एवं स्थिते फलितमाह।पदान्तस्येति।सजूष्शब्दस्येति।तदन्तस्य पदस्येत्यर्थः ॥
त्यादेशग्रहणमात्र प्रातिपदिकेनातिदन्तविधिप्रतिपादनस्य सापरमस्वसेत्युदाहृतं च संगच्छते।अस्य समासप्रत्ययविधाविति निषेधानुवादकतायाएव युक्तत्वाच्च।यत्त्व
स्य ज्ञापकं सपूर्वाच्चेति सूत्रम्।अन्यथा पूर्वादिनिरित्यत्र तदन्तविधिनैव सिद्धे किं तेन तस्य प्रत्ययविधौ प्रतिषेध इत्यस्यैव ज्ञापकमिति वक्तुं शक्यम्।अतएव तदन्तविधि
सूत्रभाष्ये समासे स्यादिनिषेधवदप्यनकथनमिति बोध्यम् ॥

प्रत्याख्यातत्वादिति॥फलाभावात्सूत्रान्तादृकृदशान्ताड्ढ इत्यादावन्तग्रहणसामर्थ्येनव्यपदेशिवद्भावाप्रवृत्तेरितिभावः॥नन्वेकगो पूर्वादित्यस्य केवलैकशब्दगोशब्दयो
रप्रवृत्त्यर्थमावश्यकी सूत्रान्ताद्दशान्तादित्यर्थं च। तत्रान्तग्रहणं तु प्रत्ययविधौ तदन्तग्रहणनिषेधात्तदन्ते प्रवृत्त्यर्थमावश्यकमिति न तत्सामर्थ्याद्व्यपदेशिवद्भावाप्रवृत्ति
र्वक्तुं शक्या। न च भयाद्व्यादृश्विव सूत्रान्तादित्यादौ विशेषणविशेष्यभावव्यत्यासेन सिद्धेन्तग्रहणसामर्थ्यमुपपादमिति कौस्तुभोक्तरीत्या निर्वाहः। समासप्रत्ययविधाविल्या
दीयानां सूत्रशब्दादेर्विशेष्यत्वे तात्पर्यग्राहकस्य सत्त्वेन विपरीतस्य तस्य वक्तुमशक्यत्वात्। न चास्यां मानाभावः। पूर्वात्त पूर्वादिनिरित्येकयोगएव कर्तव्ये पृथग्योगकरणस्य मान
त्वात्। न चेष्टादिभ्य इत्यत्रानुवृत्त्यर्थं तथा पाठः। अतएवानिष्टीत्यादिसिद्धिरिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनानिष्टीत्यादिप्रयोगाणामनिष्टत्वात्। एकयोगे पितत्रैव स्व
तेन सजुष इत्यादौ नातिप्रसङ्गः। न च सजूरित्यत्राव्याप्तिः। व्यपदेशिवद्भावो प्रातिपदिकेनेति निषेधादिति वाच्यम्। येन विधिरिति सूत्रे शब्दकौस्तुभे
स्य प्रत्याख्यातत्वात्। व्यपदेशिवद्भावो प्रातिपदिकेनेति ग्रहणवतेति च परिभाषाद्वयमपि प्रत्ययविधिविषयकमिति दिव उदिति सूत्रे कैयटहर
दत्ताभ्यामुक्तत्वाच्च। एवं च परमसजूभ्यामित्याद्यपि निर्बाधम्। एवं स्थिते इह सजूष् शब्देन तदन्तविधिर्नेति प्राचामुक्तिरापाततइत्यवधेयम्॥भो
भगो॥ असंधिः सौत्र इति। भगोअघोशब्दयोरोकारस्याकारस्य च पूर्वरूपं सौत्रत्वान्नेत्यर्थः ॥
रितत्वबलेन तावत एवोत्तरत्रानुवृत्तौ बाधकाभावाच्च। व्यपदेशिवद्भावस्य प्रातिपदिके निषेधस्वीकारादेव नान्तादसंख्यादेरिति च रितार्थम्। अन्यथा पञ्चम इत्यादाव
पि व्यपदेशिवद्भावेन संख्यादित्वात्तद्वैयर्थ्यं स्पष्टमेवेत्यरुचेराह॥ व्यपदेशिवद्भावइत्यादि॥ दिव उत्सूत्रे इति। दिव उत्सूत्रं यत्रेति बहुव्रीहिणा तत्सूत्रघटिते पादे इत्यर्थः
एवं च दिव उदिति सूत्रे हरदत्तेनेन्द्रे चेति सूत्रे कैयटेनोक्तमिति भावः॥ येन विधिरिति सूत्रे कैयटेन सूत्रोपात्तान्तादिशब्दविषयतास्येति वदता स्पष्टमेव प्रत्ययविधिवि
षयतोक्ता। असमासे निष्कादिभ्य इति सूत्रे भाष्ये कैयटे च स्पष्टमनयोः प्रत्ययविधिविषयतोक्तेति दिक्॥ इत्याद्यपीति॥ आदिना सजूर्भ्यामिति ॥

ननु सान्तानुकरणे विभाषाभवदिति वार्त्तिकनिष्पन्नानां ग्रहणं न स्यादत आह॥ रान्तं चेति॥ कृतरुत्वानुकरणमित्यर्थः॥ अलोन्त्यस्येति॥ न च भोराजसेइत्यादौ रोरीति लोपे कृते एकदेशविकृतन्यायेन भोःशब्दत्वादन्त्यस्यौकारस्य यत्वापत्तिरिति वाच्यम्। तेषामभिधाने एषां रोरपूर्वस्य च रोरिति व्याख्यानेनादोषो बोध्यः। अत्र पक्षे ऽघोशब्दान्तद्वन्द्वेषष्ठ्याः सौत्रो लुक् बोध्यः॥ अवधेयमिति॥ यदि ग्रहोलिटीति सूत्रे इटः स्थानित्वेन निर्देश इति तत्रानलाश्रयणं प्रकृते तु विसर्गे रेफस्यैव स्थानित्वाद्वेष म्यमल्विधावित्यस्य स्थान्यलवृत्तिधर्माश्र

यदि तु भोस् भगोस् अघोस् इति सान्तं रान्तं वा अनुकृत्य भो इत्यादीनां त्र याणामलोन्त्यस्य यः स्यादपूर्वस्य रोश्चेति व्याख्यायते तर्हि असन्धिर्न्याय्य एव। युक्तं चैतत्। अन्यथा विभोरिदं सुप्रभागोर्यस्य स सुप्रभगुस्तस्य ———— सुप्रभगोरिदं रघोरिदमित्यत्रापि यत्वापत्तेः। भवति ह्ययं भोशब्दादिपूर्वो रुः। न चात्र भोशब्दादेर्लाक्षणिकत्वाद ग्रहणम्। विभाषाभवद्भगवदघवतामोच्चावस्येति वार्तिकेन निष्पन्नानां भवदादिप्रकृतिकानां भोशब्दादीनामपि लाक्षणिकत्वाविशेषात्। अनर्थकत्वमप्युभयत्र तुल्यमारु विशिष्टानामेवार्थवत्त्वात्। ननु रोरुकारस्यानुबन्धकत्वाद्रेफमात्रं विसर्गस्य स्थानि तथा चानल्विधाविति स्थानिवद्भावो न स्यादित्याशङ्क्याह। नह्ययमिति। यथा ग्रहीदित्यत्र ग्रहोलिटीति दीर्घस्य स्थानिवद्भावेनेट्त्वादिटईटीति प्रवर्त्तते। एवमिहापि विसर्गस्य रुत्वाद्यत्वं प्रवर्त्तेतेति भावः। तथा च स्थानिवत्सूत्रे भाष्यम्। विशिष्टमेषोऽल्नलमाश्रयते इ टं नामेति। इतोपि हेतोर्धात्वङ्ग्त्याप भरिगणनमशुद्धमित्यवधेयम्। निपातादिति। भोमगो इति सूत्रे निर्दिष्टाश्चादेराकृतिगणत्वात्तत्र बोध्याः ॥ ॐ येस्थानिसंबन्ध्यल्वृत्ति

धर्माश्रयेच नेत्यर्थस्तत्र स्थान्यल्रेफवृत्तिरुत्वं स्थानिवत्त्वेन दुर्लभमल्विधित्वात्स्पष्टं चेदं प्रकृतसूत्रे भाष्ये इत्युच्यते तदापयः स्वित्यत्र मत्ववारणायाशीति। तत्र हि रोः सुपीति विसर्गः नियमशास्त्राणां च विधिमुखेनैव प्रवृत्तिरिति तत्र रुर्विशिष्टः स्थानीति तद्वृत्तिरुत्वस्य स्थानिवत्त्वेन लाभः सुकरः। यदि तु रोः सुपीत्यत्रापि र इत्यनुवर्त्य रो रेफस्यैव तेन विसर्गस्त

दाश्ग्रहणमुत्तरार्थं सत्स्पष्टार्थमिहैव कृतमित्यवधेयम्॥ तत्रेति॥ चादिष्वित्यर्थः ॥

वार्त्तिकेनाश्रयणीयमिति॥भोइत्यादिप्रयोगाणांनिपातैरेवसिद्धेर्निपातानामपिसंबोधनान्तभवदादिसमानार्थकत्वात्संबोधनविभक्त्यन्तत्वेनामंत्रितत्वमस्तिभवदादीत्यत्रभोःशब्दस्याप्यादिनाग्रहणात्तत्रभोइत्यादिसिद्धिरितिभावः॥अन्यथा॥साधारणानामभावे॥भोविद्वद्वन्देति॥नपुंसकेसोर्लुक्कालुप्तत्वेनवार्त्तिकाप्रवृत्तेरितिभावः॥भोगङ्गेति॥विभक्तौलिङ्गविशिष्टाग्रहणान्ङीपाव्यवधानाद्धवतःसंबुद्धिपरत्वाभावेनेतिभावः॥स्युःप्यादि त्यस्यनिपातमात्राङ्गीकारेइत्यादिः॥ननुनिपातोप्ययंभवच्छब्दसमानार्थएवेतिहोभोइत्यस्यनासंगतिरत

तथाचविभाषाभवद्भगवदितिवार्तिकंनाश्रयणीयम्।अन्यथापुल्लिङ्गैकवचनमात्रेभोहरेइत्यादिसिद्धावपिभोहरिहरौभोविद्वद्वन्द्भोगङ्गेत्यादिनसिद्ध्येदितिभावः।एतच्चवृत्तिहरदत्तादिमतेनोक्तम्।भाष्यस्वरसरीत्यातु विभाषेत्यादिवार्तिकमारब्धव्यमेव।किंतुनिपातोपिभोःशब्दोस्तितेनद्विवचनादौस्त्रीनपुंसकयोश्चनदोषः।युक्ततरंचैतत्।हेभवन्तितिवत्हेभोइतिप्रयोगस्यापीष्टत्वात्।तस्यचवार्तिकारम्भएवसिद्धेः।सुःप्यादपाडङ्ग हेहेभोरित्यमरोक्तानांसंबोधनार्थानांनिपातानांसहप्रयोगायोगात्।किंचात्रभवान्हरिस्तत्रभवान्ततोभवान्इतिवत्तत्रभोइत्याद्यपिवार्तिकेसत्येवसिद्ध्यति।इतराभ्योपिदृश्यन्तेइतिसर्वविभक्त्यन्तात्त्रतसोर्भवदादियोगएवेष्टत्वात्।किंचामन्त्रितत्वेपदात्परस्याष्टमिकनिघातः।आमन्त्रितंपूर्वमविद्यमानवद्भावः।आमएकान्तरमितिविधिः वाक्यादेरामन्त्रितस्येतिद्विर्भावः सुप्यामन्त्रितइतिपराङ्गवद्भावश्चेत्यादिसर्वंसिद्ध्यतिनत्वन्यथेतिदिक् ॥

एवभाष्यकैयटयोर्वार्त्तिकसिद्धविभक्त्यन्तप्रतिरूपकमव्ययमित्युक्तंविभक्त्यन्तप्रतिरूपकत्वंचशब्दतोर्थतइत्यन्यत्रस्पष्टम्।किंचपतिलुनीतइत्यादिवदेतयोरपिसहप्रयोगसंभवइत्यरुचेराह॥किंचेति॥पदात्परस्येति॥इदंचनभोःशब्देफलमुभयोरपिभोःशब्दयोःसंबोधनार्थत्वेनसंबोधनप्रथमान्तत्वेनामन्त्रितत्वात्।किंतुतिष्ठसिभगोतिष्ठसिअघोइत्यादौभगवन्अघवन्तिष्ठसीत्यर्थकेआमन्त्रितस्येतिनिघातसिद्धिः।निपातयोस्तुतयोःसंबोधनेशक्तौमानाभावेनसंबोधनप्रथमान्तत्वाभावेनामन्त्रितत्वाभावात्।भगोतिष्ठसीत्यादौअविद्यमानत्वम्।ओंभगोदेवदत्तेत्यादौएकान्तरताभगोआगच्छेत्यादौद्विर्भावः धनेनभगोइत्यादौपराङ्गत्वमितिभावः ॥

यदि प्रामाणिकाविति॥ यदीत्यनेनेदं सूचितं तौ न प्रामाणिकौ। अत एव भाष्ये विभाषा भवदिति व्याख्यायभो ब्राह्मणीत्यस्यैवासिद्धिमाशङ्क्याव्ययमेषभोः शब्दो विभक्ति प्रतिरूपकत्वादित्येवोक्तम्। एवं च भगो हरिह रावित्याद्यसाध्वेव॥ तदतिरभसादिति॥ भोभगो मतुवसोरिति सूत्रयोरस्यार्थस्य भाष्येऽस्पष्टत्वादिति भावः॥ उभयग्रहणादिति॥ वार्त्तिकबोधितसाधुत्वानामपि कुलटायावेत्यादौ कार्यान्तरबोधनाय सूत्रकृतानुवादस्य करणादिति भावः। हरदत्तेति॥ एवं चानित्यत्वान्नदप्रवृत्तौ उभयोर्ग्रहणसिद्धि

भगो अघो इति निपातावपि यदि प्रामाणिकौ तर्हि स्तां नाम। आमन्त्रितकार्यसिद्धिस्तु वार्तिकाद्यत्नैवेति सुधीभिराकलनीयम्। यत्तु वदन्ति। सकारान्तानेवैतान् निपातानास्थाय रुत्वौत्वे भाष्ये प्रत्याख्याते इति। तदतिरभसात्। स्यादेतत्॥ निपातानामभ्युपगमेपत्वविधौ न एव गृह्येरन् प्रतिपदोक्तत्वात्। न तु संबुद्ध्यन्ताः लाक्षणिकत्वात् इति चेन्नैवम्। स्वरितेनाधिकार इत्यत्राधिकः कारोऽधिकार इति व्याख्यानमाश्रित्य लक्ष्यानुरोधेन स्वरितत्वमाश्रित्योभयग्रहणात्। भुवश्च महाव्याहृतेरिति सूत्रे महाव्याहृतिग्रहणं लक्षणप्रतिपदोक्त परिभाषाया अनित्यत्वज्ञापनार्थमिति हरदत्ताद्युक्तेश्च। नन्वेवमपि प्रभोरित्यादावतिव्याप्तिः। परस्परसाहचर्येण निपातानां वार्त्तिकोक्तानां च ग्रहणेप्यन्येषामग्रहणात्। व्योर्लघु। लघुप्रयत्नतरः लघूच्चारणतरः सवान्तरतम्याद्ध्रस्वो यस्य य इत्याह। वयाविति ॥

रिति भावः। विभाषा भवदिति वार्तिके भो ब्राह्मणा भो ब्राह्मणीत्यसिद्ध्याशङ्कायामव्ययमेषभोः शब्द इति सिद्धान्ते नोभयोरत्र ग्रहणलाभादिति बोध्यम्॥ परस्परसाहचर्येणेति॥ तेन चार्थवतामेव ग्रहणमिति भावः। अर्थवत्परिभाषयेत्यपि बोध्यम्॥ अन्येषाम्। अनर्थकानां सान्तरान्तानां प्रतरानुकरणमिति पक्षे प्रसिद्ध्या भोइत्यादि पूर्वकरेफान्तानामेवार्थवत्तां ग्रहणस्यन्याय्यतया भो इत्याद्योकारान्तानुकरणपक्षेपि वार्त्तिकनिष्पन्नानां निपातानां चैकदेशभूतभोशब्दादीनामेव ग्रहणमिति भावः। अत्रेदन्तत्त्वं रान्तानामेवानुकरणं सूत्रे सन्ध्यभावो न्याय्य एवेति भाष्यस्वरसः। लघूच्चारणतरो लघुतरोच्चारणः ॥

हलोविशेषणादिति ॥ स्पष्टं चेदं भाष्ये ॥ इत्याहुरिति ॥ हरदत्तादयः । वकारलोपे तत्तस्तदर्थानवगतेरित्यर्थः । एवं च करोत्यादिपरे तितन एव लोपेन भविष्यतीत्यशाह लो । विशेष
णं व्यर्थमिति सूचितं भाष्यमपि तदेकदेशयुक्तिरेव । न पदान्ताः परे ऽणः सन्तीति लण्सूत्रस्थभाष्यविरोधाच्च । इडभावो ढत्वं चेति ॥ चेन नलोपसंग्रहः ॥ ढलोपादिति ॥ ढो ढेलोप

ओतो गार्ग्यस्य । ओकारादिति । यत्त्वोकारान्तादङ्गादिति प्राचा व्याख्यातं तन्न । अङ्गस्याप्रकृतत्वात् । असंभवाच्च । न ह्युदाहरणे ष्वोकारान्तमङ्गमस्ति । हलि सर्वेषा
म् । यकारस्येति । वकारस्तु नानुवर्तते । भोभगोअघोपूर्वस्यासंभवात् । अपूर्वस्तु यद्यपि संभवति वृक्षव्करोतीति तथापि तत्र लोपाप्रसङ्गः । अशीत्यनुवर्त्याशाह लो । वि
शेषणात् । वृक्षवृहसतीत्यादि तु अनभिधानादसाध्वित्याहुः । गव्यमित्यत्र तु पदान्तत्वं नास्ति । गव्यूतिरित्यत्र तु वकारप्रश्लेषान्न वलोप इत्युक्तम् । ननु देवानस्मा इ
त्यादौ लोपो व्योरित्येव सिद्धेः । मैवम् । तं प्रति यत्वस्यासिद्धत्वात् । देवा यान्तीत्यत्र वल्परत्वाभावाच्च । अहोरात्र इति । रात्राह्नाहा इति पुंस्त्वम् । अहरादीनामिति । उभय
त्राप्यादिशब्दः प्रकारे । तेन स्वर्चक्षारथिनः स स्वश्शुष्माः विप्रः कविः काव्येनास्वर्चनादित्यादि ग्राह्यम् । तढो वृढ इति । उदित्वेन वेट्कत्वाद्यस्य विभाषेति निष्ठायां नेट् ।
ढत्वधत्वष्टुत्वढलोपाः । यत्तु प्राचा प्रत्युदाहृतं दृढ इति तन्न । तत्र ढलोपस्यैवाभावात् । तथाहि । दृढ स्थूलबलयोरिति सूत्रेण दृंहेर्नकारहकारयोर्लोपः । तकारस्य
ढत्वं च निपात्यते । न च सिद्धकाण्डस्य ढत्वस्येह प्रवृत्तिः । दादेर्धातोरिति घत्वेन बाधात् । न चइडभावो ढत्वं च निपात्यतां धत्वष्टुत्वढलोपास्तु भविष्यन्त्येवेति वा
च्यम् । तथा सति परिवृढयतेत्यत्र ल्यपि लघुपूर्वादिति णेरयादेशो न स्यात् । पारिदृढीकन्येत्यत्रापि ञोरिति ष्यङ्‌ चन स्यात् । ढलोपस्यासिद्धत्वेन गुरूपोत्त
मत्वादिति भाष्ये स्थितम् ॥

इत्येतद्दृष्ट्याष्टुत्वं तु नासिद्धं सामर्थ्यादिति भावः ॥ भाष्ये स्थितमिति ॥ दृढस्थूलेति सूत्रे इति शेषः ॥

म.श्रु. द्रष्टव्यमितीति॥ ष्यङि णेरस्याभावे चेष्टापत्तिरितिभावः॥ उभयोरपीति॥ त्वदवलम्बभूतेन वृत्तिकृतेति शेषः। तदाह वामन इति॥ अत्रारुचिबीजं तु ढ्हे र्नकारहकारलोपार्थमिति
३५ भाष्यविरोधः। अनिदितां हे स्तुदहितमित्येवेष्यत इति कैयटविरोधश्चेति। किंच प्रसादोक्तरीत्या ढ्हे रपि इड्भावे ढत्वयोः सिद्धाविण्निषेधप्रकरणे दढ इति निपातनस्य
४४ व्यर्थत्वमित्यलम्। अभावादुत्तरस्येति। आहार्याभावारोपादित्यर्थः। लिङ्गमिति। विहितविशेषणे तद्धेयर्थ्यं स्पष्टमेवेतिभावः। सास्माअरमिति। सोस्माअरमिति सन्धावपि पा

यत्तु प्राचा व्याख्यातं ढ्हेरेवेदं निपातनं दृढ इति तु प्रकृत्यन्तरमिति तस्य निश्चायामागमशास्त्रस्यानित्यत्वादिड्भावे वा दृढेत्यत्र ढेति योगविभागात् पक्षे षत्वाभावे ढलोपे
सत्तु प्राचा व्याख्यातं ... तदाहुर्वामनः। अथ दहिः प्रकृत्यन्तरमस्ति तस्यैतन्निपातनं नलोपवर्जमिति। युक्तं चैतत्। अ
चप्रत्युदाहरणमिदं द्रष्टव्यमिति। तन्न। उभयोरपि निपातनाभ्युपगमात्। तदाह वामनः। अथ दहिः प्रकृत्यन्तरमस्ति तस्यैतन्निपातनं नलोपवर्जमिति। युक्तं चैतत्। अ
न्यथा हि अस्मास्वेरयन स्यात् ष्यङ् च स्यात्। उत्वमेवेति। सिद्धासिद्धयोरतुल्यबलत्वेन विप्रतिषेधं परत्वस्याप्रवृत्तौ निष्प्रतिपक्षत्वादुत्वमेव भवतीत्यर्थः। तदुक्तम्। पूर्वत्रासि
द्धे नास्ति विप्रतिषेधोभावादुत्तरस्येति। एतेन विभक्तिकार्यं प्राक् पश्चादुत्वमत्वे इत्यादिव्याख्यातम्। सूत्रे सु इति दृष्यक् पदं लुप्तषष्ठीकमित्याह। एतत्तदोर्यः सुरिति। एतत्तदर्थगत
संख्याभिधायीयः सुस्तस्येत्यर्थः। एतत्तदोर्विहित इति व्याख्याने तु परमसददाति परमैषददातीत्यादौ न स्यात्। अर्थद्वारकसंबन्धाश्रयणे लिङ्गत्वनञ्समासइतिबोध्यम्। अकोः
किमिति। साकच्कयोः शब्दान्तरत्वादप्रसङ्ग इति प्रश्नः। एषक इति। अकोरिति प्रतिषेध एव तन्मध्यपतितस्तद्ग्रहणेन गृह्यत इति परिभाषां ज्ञापयतीति भावः। बहुल
ग्रहणेति। अत एव लोपं विना पादपूरणेपि क्वचिद्भवति। सा स्म॥ अप्सः अस्मैद्द इतिच्छेदः॥ * इतिस्वादिसन्धिः ॥ * ॥ श्रीसंकटाभैरवाभ्यां नमः। श्रीगुरुचरणाभ्यां नमः। राम:

टपूर्त्तेः। नच प्रकृत्यान्तः पादमिति पूर्वरूपस्याभावेनन पादपूर्त्तिः सोयमागादित्यादाविव अत्रापि प्रातिशाख्येन सिद्धेः। एवञ्चावधारणपरतया नव्याख्येयम्। सोहमाजन्मेत्यादौ बहुल ३५
ग्रहणेन क्वचिदप्रवृत्त्यापि सिद्धेरिति तात्पर्यम्॥ ॥ इति दीक्षितभट्टोजिपौत्रदीक्षितहरिकृते मनोरमाव्याख्याने लघुशब्दरत्ने पञ्चसन्धिप्रकरणम् ॥ नमो ब्रह्मणे॥ ४४

श्रीगणेशायनमः॥ अर्थवत्स्यादिति॥ नचास्यापत्यमित्यादौ प्रत्ययत्वप्रयुक्तनिषेधबाधेनेनतच्चरितार्थम्। अभसिद्धत्वस्यायांप्रवृत्तसंज्ञायाएकदेशवि
कृतन्यायेनसुलभत्वात्। एकार्थीभावेनेति॥ नचैतत्प्रत्ययमात्रस्यतन्मात्रेएकार्थीभावाभावादितिभावः। एकार्थीभावश्चयस्यप्रातिपदिकसंज्ञाचिकीर्षितात
न्मात्रवृत्तिरेवग्राह्यः। तेनपञ्चनावप्रियइतिसमासघटकपञ्चनावेत्यस्यतद्धितान्तत्वसमासत्वयोरप्रिनप्रातिपदिकत्वम्। प्रियपञ्चन्नन्तस्यवतत्रैकार्थी

श्रीगणेशायनमः॥ अर्थवदधातुः। प्रत्ययःप्रत्ययान्तंचेति। सूत्रेतन्त्रादिनाउभयंविवक्षितमितिभावः। तथाहि। प्रत्ययस्यैव
पर्युदासेकृत्तद्धितेतिसूत्रेणतद्धितान्तस्यसंज्ञाविधानंव्यर्थंस्यात्। नचतत्रापितदन्तंनग्राह्यमितिवाच्यम्। अर्थवदित्यनुवृत्तिसाम
र्थ्यात्तदन्तग्रहणात्। प्रशंसायांहिमतुप्। एकार्थीभावेनलौकिकेप्रयोगेप्रसिद्धत्वंचप्रशंसामूलम्। नचअर्थवदित्यस्यपूर्वसूत्रेचरिता
र्थता। धातुप्रत्ययपर्युदासेनैवतल्लाभात्। तस्मात्प्रत्ययान्तंचवर्जयित्वेत्युचितमेव। यदितुप्रत्ययोनपर्युदस्येततर्हिसात्पदाद्योरिति
सूत्रेसातिग्रहणंव्यर्थंस्यात्। अर्थवदितिकिम्। धनंवनमित्यादौप्रतिवर्णंसंज्ञामाभूत्। तस्यांचसत्यांस्वादयःस्युः। ननुसंख्याकर्मा
देरभावान्नभविष्यन्तीतिचेन्न। एकवचनमुत्सर्गतःकरिष्यतेइतिसिद्धान्तात् ॥

भावोनतुतन्मात्रवृत्त्यदोषात्। नचक्विबन्तेदोषः तत्रधातोरेवविशिष्टार्थबोधकत्वेनअर्थवत्त्वबुद्धितीयाभावेनपृथगर्थानामेकोपस्थितिजनकत्वरूपैकार्थीभा
वाभावादितिवाच्यम्। अलौकिकेवाक्येकल्पितैकार्थीभावस्यतत्राप्यारोपेणादोषात्॥ अर्थवत्स्यादिति॥ अनेनप्रत्ययपर्युदासेमानमुक्तम्। सातेःप्रातिपदिकत्वे
हितत्रऔत्सर्गिकैकवचनेनस्यापिसुबन्तत्वेनपदत्वेपदाद्विल्वादेरनिषेधसिद्धेस्तद्व्यर्थमितिभावः॥

सोर्दुर्वीरत्वादिति॥ तस्य च समुदायप्रातिपदिकत्वेन तदवयवत्वाल्लुक् समुदायसंज्ञाचान्तरंङ्गत्वाद्‌व्ययेभ्यः प्रातिपदिकेदकत्वात्सुपि चुसति प्रवर्तत इति तस्य
तदवयवत्वमत्वसंयचतिध्वनतीत्यादीनावयवानांसा। धातुप्रत्ययान्तपदयोस्तदवयवपरत्वेन तत्र तन्नियेधात् तस्मादव्युत्पन्नप्रातिपदिकावयवेभ्यस्तदुत्पत्ति
रापाद्या। घनशब्दस्य घिनोतेर्घनमिति व्युत्पत्तिपक्षे तु वनाद्युदाहरणं बोध्यम्। ध्वनितं चेदं भाष्यकैयटयोः। तस्मान्नलोपाद्यापत्तिर्दोषः। इदमव्ययेभ्य इवतेभ्योपि सु
पएकवचनाभ्युपगमेन। यदि तु तदुत्पत्तिः स्यात्सैव गमके। यथाव्ययेभ्य उत्पत्तावव्ययादाप्सुपेति गमकम्। नान्यत्र एकवचनमिति महासंज्ञाकरणात् प्रकृते तु न
तथा गमकम तएव ङ्याबिति सूत्रे प्रातिपदिकाधिकाराभावे तिङन्तेभ्यस्तदुत्पत्तिमाशङ्क्य कृत्वादीनामुक्तत्वान्नेति समाहितं भाष्ये तद्रीत्यौत्सर्गिकमेकव

हुंफडादिभ्य इव सोर्दुर्वारत्वात्। नच अर्थवद्ग्रहणपरिभाषयाऽनर्थकेन स्यादिति वाच्यम्। तस्या विशिष्टरूपोपादानविषयत्वात्। अधातुरि
त्यादि पर्युदासबलेन यद्यप्यर्थवत्त्वं लभ्यते तथापि उत्तरार्थं तदित्युक्तम्। एतच्च सुप्तिङन्तमिति सूत्रे भाष्ये ध्वनितम् ॥

चनं दुर्वारमेव। अत एवाग्रे भाष्येऽर्थवत्सदस्सदश दाडिमानीत्यादि पदसमुदायो निरर्थको व्यावर्त्यत्वेन प्रदर्शितस्तत्र हि सुपो धात्विति स्य प्राप्तिरि
ति तदेवास्य मुख्यं व्यावर्त्यम्। पचतः कल्पमित्यादौ तत्र वृत्तौ रूपसूत्रस्थं भाष्यं गमकम्। समासग्रहणकृतनियमस्तु अर्थवत्समुदायविषयक इति भाष्ये
स्पष्टमिति न तेनास्य व्यावृत्तिरिति दिक्॥ यद्यप्यर्थवत्त्वमिति॥ व्याख्यानादर्थवत्त्वेनैव सादृश्यं गृह्यत इति भावः॥ उक्तमिति॥ एतेनेदमुक्तमेव पुनर्दीर्घ्यो
योच्यत इति सूचितम्। भाष्य इति॥ एवं हि तत्र भाष्यं। अर्थवदिति वर्त्तते कृत्तद्धितान्तं चैवार्थवद्‌न केवलाः कृतस्तद्धिता वेति कृत्तद्धितान्तसूत्रे न ग्रह
णं न कार्यमिति। अर्थवद्ग्रहणानुवृत्तिसामर्थ्यादेव चेदं प्राप्यर्थलाभ इति कैयटः ॥

समुदायार्थारोपादिति॥ तेन तन्मात्रस्य क्रियावाचित्वनिबन्धनधातुत्वसिद्धिरिति भावः॥ तत् क्रियावाचकत्वम्। तत्तदर्थविभागश्चेति। तस्य तस्येति कृतद्विर्वचनेन ष
ष्ठीसमासे सस्योर्थविभाग इति कर्मधारये वा विभक्तिलुकि इदं साधु। एते नान्याम्य प्रादुर्भावादिति अपादाने ऽस्त्रियामीति सूत्रस्य भाष्यप्रयोगोपि व्याख्यातः। सुबन्तत्वमपि
द्धिः प्रयोगपक्षद्वयस्यानेद्विर्वचनपक्षेप्याद्यान्यशब्दे प्रकृतित्वबुद्ध्यान्त्यस्य शब्दे प्रत्ययत्वबुध्या सूपपादम्॥ सर्व इति। धातूपसर्गविभागो वृत्तिष्वेकार्थीभावश्चेव मेवेति भा

मत्वाहुः। पर्युदासो नार्थवत्त्वं गमयति। अनर्थकयोरपि धातुप्रत्यययोर्दर्शनात्। अधीते याव क इति। अधिपूर्वस्यैवेङः प्रयोगात् विशिष्ट एव अर्थवान् न तु
केवलः इङ् अध्ययन इत्याद्यर्थनिर्देशास्तु अवयवे समुदायार्थारोपात्। एवं कन्नप्यनर्थकः। यावशब्दादपि तदर्थप्रतीतेः। ओषधेश्च विभक्तावप्रथमायाम कर्तृ
रि च कारक इति विभक्तिकारकग्रहणाभ्यां नञ्चियुक्तन्यायस्यानित्यत्वकल्पना चेति। अत्रेदं वक्तव्यम्। धातुरनर्थक इति तावद्व्याहतम्। क्रियावाचकत्वं वि
ना धातुत्वायोगात्। आरोपितं तदिति चेत्। सत्यम्। तावतैवेष्टसिद्धेः। प्रकृतिप्रत्ययविभागः तत्तदर्थविभागश्च सर्वः कल्पित एव। परमार्थतस्तु स्फोट एवार्थवानिति सि
द्धान्तात्। उक्तं च हरिणा। उपायाः शिक्षमाणानां बालानामुपलालनाः। असत्ये वर्त्मनि स्थित्वा ततः सत्यं समीहत इति। कथमन्यथा इङो द्विर्वचनमडादयश्च स्युः। तथा
च प्रत्याहाराह्निके अर्थवन्तो वर्णा इति प्रघट्टके अध्येति अधीत इत्यत्रेकारो ऽर्थवानिति भाष्ये स्पष्टमेवोक्तम्। एवं कन्प्रत्ययोप्यर्थवानेव। स्वार्थिकानां प्रकृत्यर्थनैव। ऽर्थवत्त्वात्।

वः॥ स्फोट एवेति॥ पदरूपो वाक्यरूपो वेत्यर्थः। लोकानां तत्रैव शक्तिग्रहेण बोधादिति भावः। अत एव तस्य परमार्थत्वं लोके बोधजनकत्वात्। शास्त्रेण प्रकृतिप्रत्ययविभागन्तु त्या
दनेन विशिष्टपदस्यैव तत्तदर्थबोधनद्वारा विशिष्टे पदे विशिष्टार्थबोधकत्वमेव बोध्यते। उपलालना इत्यस्युर्भवन्तीति शेषः। न तु वास्तवा इति भावस्तदाह। असत्य इति। आरो
पित इत्यर्थः। लोकानान्तच्छब्दजन्यबोधानुपयोगित्वात्तत्त्वम्। सत्यम्। विशिष्टशक्त्याबोधकं पदादीत्यर्थः॥ स्त्रैरिति॥ अधिजगे ऽध्यगीष्टेत्यादौ॥ अर्थवत्त्वादिति॥ आरोपितार्थवत्त्वादि

